International Journal of Sanskrit Research 2023; 9(5): 84-86

International Journal of Sanskrit Research

अनन्ता

**ISSN: 2394-7519**
IJSR 2023; 9(5): 84-86

www.anantaajournal.com
Received: 25-07-2023
Accepted: 01-09-2023

**डॉ. प्रदीप्तकुमारनन्दः**
अध्यक्षः सर्वदर्शनविभागः, श्री जगन्नाथ संस्कृत विश्वविद्यालय, श्रीविहार, पुरी, ओडिशा, भारत

**Corresponding Author:**
**डॉ. प्रदीप्तकुमारनन्दः**
अध्यक्षः सर्वदर्शनविभागः, श्री जगन्नाथ संस्कृत विश्वविद्यालय, श्रीविहार, पुरी, ओडिशा, भारत

# शाक्तदर्शने लक्ष्मीतत्त्वम्

**डॉ. प्रदीप्तकुमारनन्दः**

**सारांश**
वेदोऽस्माकं ज्ञाननिधिः । वेदं विहाय भारतीयानां कृते किमपि अधिकं नास्ति । अत्र पृथिव्यां यावन्ति तत्त्वानि विलसन्तितमां तानि सर्वाण्येव वेदे सूक्ष्मरूपेण निहितानि सन्ति । न केवलं दर्शनेषु दार्शनिकग्रन्थेषुए किन्तु ऋग्यजुःसामार्थवाणश्चेति वेदचतुष्टयेष्वपि लक्ष्मीतत्त्वविषयकं श्रीसूक्तमुपलभ्यते । मन्त्रस्तावत्.

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥[1]

या लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्यमित्यर्थः इति वेदभाष्यकारेण महीधरेण उक्तः। इदं श्रीसूक्तं प्राचीन.पञ्चरात्रवैष्णवशास्त्रेषु पुराणशास्त्रेषु आगमेषु शाक्तग्रन्थेषु च नानास्थानेषु उपन्यस्तम् । सर्वादौ देवीपुराणेऽपि देव्याः माहात्म्यं वर्णितम् । तथाहि.

विष्णुपूजासहस्राणि शिवपूजाशतानि च ।
अम्बिकाचरणाचार्याः कलां नार्हन्ति षोडशीम् ॥

अत्र आद्या देवी महालक्ष्मीः । या शक्तितत्त्वस्य मूलभूता महामायेति गीयते । शाक्तसंप्रदाये लक्ष्मीसकाशात् सृष्टि.स्थिति.संहारोत्पत्तिर्वणिता । शाक्तदर्शने लक्ष्मीतत्त्वं कीदृशं विवेचितं तदेव शोधप्रबन्धरूपेणात्र प्रस्तौमि ।

**कूट शब्द** : लक्ष्मीः महालक्ष्मीः, माया, शक्तिः, विद्या, अविद्या

## प्रस्तावना

मुख्यतः शाक्तदर्शनस्य मूलसूत्ररूपेण द्विविधं सूत्रमुपलभ्यते । एकं हयग्रीवप्रोक्तं शक्तिसूत्रमपरं चागस्त्यविरचितं शक्तिसूत्रम् । आद्ये हयग्रीवप्रोक्ते शक्तिसूत्रे अष्टादशाध्यायाः सन्ति । प्रत्यध्यायः चतुष्पादात्मकः। तत्र प्रथमाध्याये 51 सूत्राणि, द्वितीये 62, तृतीये 67, चतुर्थे 52, पञ्चमे 74, षष्ठे 74, सप्तमे 81, अष्टमे 87, नवमे 61, दशमे 58, एकादशे 81, द्वादशे 71, त्रयोदशे 82, चतुर्दशे 73, पञ्चदशे 118, षोडशे 77, सप्तदशे 63 एवमष्टादशाध्याये 108 एवं सर्वाणि मिलित्वा 1340 सूत्राणि संदृश्यन्ते ।[2] अगस्त्यकृतं शक्तिसूत्रं चतुरध्यायविशिष्टम् । प्रथमाध्याये 126 सूत्राणि, द्वितीये 57, तृतीये 54 एवं चतुर्थे 68 सूत्राणि सन्ति ।

---

[1] **लक्ष्मीसूक्तम्-१**

[2] शाक्तदर्शने

सर्वाणि मिलित्वा 305 सूत्राणि संकलितानि । ब्रह्मसूत्रस्य शक्तिभाष्यं पञ्चाननतर्करत्नभट्टाचार्येण संपादितम् । अत्र मूलशक्तिरात्मा । शक्तिस्तुरीयोऽऽनन्दब्रह्म । इयं महाशक्तिरुपनिषदि उमा, महाशक्तिः, महामाया, महालक्ष्मीनामी च सुपरिचिता दृश्यते । उभयतः शैवशाक्तानां कृते सा ध्येया, परमाराध्या । तथाहि चिदचित्पर्याप्तसत्ताविशेषः शक्तिर्ब्रह्म । स परमात्मा इत्यादिनामभिश्च व्यपदिश्यते ।

परमात्मा एकः । तद् व्याप्याश्च नित्यानित्यभेदभिन्नाः शक्तयोऽनन्ताः । नित्ये पुनर्द्वे चिन्मात्राचिन्मात्रभेदात्। ब्रह्मस्वरूपा सा शक्ति साकारा निराकारा च । यया खलु निर्माणकायतया साकारत्वं भक्तानुग्रहकारकत्वमित्यालम्ब्यते । तत्त्वज्ञानं तु महाशक्तेः करुणा, सा च तदुपासनाधीना, उपासनानि तत्करुणाविशेषफलम् । अत्र मूलशक्तिर्दुर्गा उक्ता ।

शक्तितत्त्वम्-

इदं शक्तितत्त्वं शैवशाक्तदर्शनयोः शीर्षस्थानमधिकरोति। आगमेऽपि शक्तिवादसम्बन्धे बहुमूल्यतथ्यं निहितमस्ति । तदुक्तम्-

शक्त्यात्मकः स भगवान् सर्वशक्त्युपबृंहितः[3] । शक्तिसमृद्धो भगवान् नारायणः । असौ तच्छक्तिमत्तया जगत्सृजति । जयाख्यसंहितायां चतुर्विधा शक्तिः परमेश्वरस्य उक्ता । लक्ष्मीः, कीर्तिः, जया, माया चेति । ताः शक्तयः भगवदाश्रिताः सन्ति । तदुक्तम्-

लक्ष्मीःकीर्तिर्जया माया देव्यस्तस्याश्रिताः सदा ।
स्वशक्तिनिचयोपेताः निराकारास्तु निश्चलाः ॥[4]

एतासां चतुःशक्तीनां मध्ये लक्ष्मीदेवी सर्वश्रेष्ठा । सा ऐश्वर्यस्वरूपिणी । रश्मिसूर्ययोरिव तरंगसमुद्रयोरिव लक्ष्मीनारायणयोरविनाभावः सम्बन्धः । सा कर्त्री[5] अजा[6] च । लक्ष्मीतन्त्रे सा नारायणादभिन्ना । तयोः समवायसम्बन्धः स्थिरीकृतः । यदुक्तम्-

सूर्यस्य रश्मयो यद्वदूर्मयश्चाम्बुधेरिव ।
सर्वैश्वर्यप्रभावेण कमला श्रीपतेस्तथा ॥[7] अन्यत्रापि-

परमात्मा हरिर्देवस्तच्छक्तिः श्रीरिहोदिता ।
श्रीर्देवी प्रकृतिः प्रोक्ता केशवः पुरुषः स्मृतः ॥

श्रीदेवी विष्णुं विना विष्णुश्च श्रीदेवीं विना कदापि न तिष्ठति। लक्ष्मीनारायणात्मिका सृष्टिः सर्वसिद्धान्तप्रमाणिता। यच्चोक्तं लक्ष्मीतन्त्रे-

लक्ष्म्या सह हृषीकेशो देव्या कारणरूपया ।
रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥[8]

सा विचित्रजगन्निर्माणादिसामर्थ्यरूपा[9] विद्याविद्या[10] भेदेन द्विधा विभज्यते । सा चित्प्रतिविम्बरुपा[11] शक्तिरियं ब्रह्मणः सकाशाद् भिन्नाभिन्नेति प्रतिपादयितुं न शक्यते । ब्रह्मणः सकाशात्तस्याः भेदो दृश्यते तथा चाभेदोऽपि दृश्यते। "सात्त्विकी महालक्ष्मीः" [12] सूत्रयुक्त्या शाक्ताः खलु जगत्कारणत्वेनांगीकृतां मायाशब्दार्थवाच्यां महाशक्तिमभ्युपेत्य मातुलुंगगदाखेटासिधारिणी महालक्ष्मीं शक्त्याः प्रथमावतारः वर्णयन्ति । एषा महालक्ष्मी कूटस्था निराकारापि साकारा निर्गुणापि सगुणा च । इयं च पराशक्तिः शिवशक्तिर्विष्णुशक्तिश्चेति कथ्यते । तस्याः महालक्ष्म्याः करधृतेन मातुलुंगफलविशेषेण सर्वकर्मफलदात्री, गदया क्रियास्वरूपा विक्षेपशक्तिः, खेटेन ज्ञानशक्तिरुक्ता । सा च महाकाली महासरस्वतीति द्वे शक्ती उत्पाद्य ब्रह्माणं पुरुषं श्रियं च स्त्रियमुत्पादयामास । स्वयं मिथुनं जनयित्वाऽऽह- अहमिव युवामपि मिथुनमुत्पादयतमिति । इत्येवं क्रमेण शाक्तदर्शनसम्मता सृष्टिरुक्ता । यच्चोक्तं प्राधानिके रहस्ये-

सर्वस्याद्या महालक्ष्मीः त्रिगुणापरमेश्वरी ।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता ॥

इत्यारभ्य

महालक्ष्मीर्महाराज सर्वसत्त्वमयीश्वरी ।
निराकारा च साकारा सैव नाना विधानभृत् ॥

[3] जयाख्यसंहिता-६/२२३

[4] तत्र-६/७७

[5] अगस्त्यसूत्रम्-१

[6] तत्र-२

[7] तत्रैव-६/७८

[8] लक्ष्मीतन्त्रम्-२४/२८

[9] ह०श०सू-१/२

[10] तत्र-१२

[11] तत्र-२/२

[12] हयग्रीवसूत्रे-१/११

इत्यन्तं ऊनत्रिंशत् पद्यैः सृष्टिप्रक्रिया समाविष्टा ।[13] महालक्ष्मीः मूलप्रकृतिः । सा माया, सा अविद्या,साऽनादि, सा मित्या, सा जडा चेति नाना नामभिः परिव्याप्ता । मायायाः स्वरूपमनिर्वचनीयम् । शंकरभगवत्पादेनापि स्वकीये ब्रह्मसूत्रभाष्येऽस्याः महत्त्वं भाषितम्- "यो हि महामायां ब्रह्मशक्तिं वेत्ति स मृत्युं जयति, पापमुक्तो भवति, अमृतत्त्वमश्नुते । अव्यक्ता हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्" [14] वैदान्तिनो वदन्ति- ब्रह्मणि जगत्प्रपञ्चोऽध्यस्तो भवतीति। सत्यम् । किन्तु यया जगदध्यस्तमनुभूयते तस्या अघटन घटन पटीयस्याः मायायाः स्वरूपं विज्ञातुमसम्भव एव । सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनीति माया प्रमाणिता । यथा रज्जुस्वरूपविज्ञानेन सर्पभ्रमो नश्यति तद्वदभेदब्रह्मविज्ञानेन मायायाः विलयः परिकल्प्यते । तदा सा त्रिगुणात्मिका ब्रह्मपदवाच्या । तथाहि-

अहमेवासं पूर्वन्तु नान्यत् किञ्चिन्नराधिप ।
तदात्मस्वरूपं संवित् परंब्रह्मैकनामकम् ॥
अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम् ।
तस्य काचित् स्वतः सिद्धाः शक्तिर्मायेति विश्रुता ॥[15]

इति आदिशक्तेः महालक्ष्म्यारुत्पत्तिस्तु वैकृतिके-

सर्वदेवशरीरेभ्यो याऽऽविर्भूताऽमितप्रभा ।
त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥[16]

अपि च-

सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी ।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्यकृत्स्नं व्यवस्तिता ॥[17] इति

उपसंहारः

त्रिगुणमयी परमेश्वरी महालक्ष्मीः सर्वेषामादिकारणं मूलप्रकृतिः इति निर्विवादमेव । सा कदाचित्सगुणा । तस्यैव सर्वं विश्वं व्याप्तमिति शाक्ताः स्वीकुर्वन्ति। सर्वप्रपञ्चादिकारणं, सात्त्विक-राजसिक-तामसिक-मूर्तित्रयसमष्टिरेव । अथर्वशीर्षे- यस्या लक्ष्यं नोपलक्ष्यते इत्यादौ आद्या प्रकृतिर्महालक्ष्मीर्युगपद् अलक्ष्या, लक्ष्या, निर्गुणा, सगुणा, निराकारा, साकारा च । प्राधानिकरहस्ये- निराकारा च साकारा सैव नानाभिधानभृत् ॥ तथा चोक्तमहिर्बृध्न्यसंहितायाम्-

विष्णोः सर्वांगसम्भूता भावाभावानुगामिनी ।
शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसम्मता ॥[18]

न शक्तिः स्वतन्त्रा परतन्त्रा विष्णोर्योगनिद्रा ।[19] एवंरुपेण शाक्तमते लक्ष्मीतत्त्वं दिङ्मात्रं प्रदर्शितम् । अलमतिविस्तरेण।

## सन्दर्भ सूची


१. सप्तशतीचण्डी- गीताप्रेस गोरखपुर
२. सप्तशतीचण्डी, सप्तटीकायुक्ता- हरीश्चन्द्रमणि त्रिपाठी, संम्पूर्णानन्दसंस्कृतविश्वविद्यालय वाराणसी
३. शाक्तदर्शनम्, काशीनाथवासुदेव अभ्यंकरकृता टीका सहिता, वासुदेवशास्त्रिअभ्यंकर पब्लिकेशन,पू ना
४. शाक्तदर्शन, पण्डितश्रीकालीचरण जी पन्त,कल्याण मन्दिर,प्रयाग
५. शक्तिभाष्य का अध्ययन, श्रीमती सुशीला कमलेश, चौखम्बा संस्कृत सिरिज अफिस, वाराणसी
६. शक्तिसूत्राणि, sanskritdocument.org
७. शाक्तदर्शनम्, चक्रेश्वर भट्टाचार्य, चौखम्बा संस्कृत सिरिज अफिस, वाराणसी
८. लक्ष्मीतन्त्रम्, चौखम्बा संस्कृत सिरिज अफिस वाराणसी
९. ब्रह्मसूत्रशांकरभाष्यम्, चौखम्बा संस्कृत सिरिज अफिस वाराणसी
१०. जयाख्यसंहिता, ओरिएण्टाल इन्ष्टिट्युट्,पूना
११. ऋग्वेदः,चौखम्बा पब्लिकेशन,दिल्ली
१२. देवीभागवतम्, गीताप्रेस गोरखपुर
१३. अहिर्वृध्यसंहिता, आड्यार लाइब्रेरी,चेन्नई


[13] दुर्गासपशत्यां प्राधानिके रहस्ये

[14] शांकरभाष्यम्-१/४/३

[15] देवीभागवते-७-३२

[16] वै०र०-७

[17] प्रा०र०-४

[18] अहिर्बृध्न्यसंहिता-३/२३

[19] शाक्तदर्शनम्-२/१-३